ऊँनर्मायेत्यस्य नारायणऋषिर्भुरिगतिजगती छन्दो द्रव्यं दैवतम् १

**मंत्रार्थः**–(नर्माये)(पुंश्चलूम्)दुष्टांनारीम् ६(हसाये)(कारिम्) करणशीलम् ७(यादसे)(शावल्याम्) शवलः कर्वूरवर्णःनदपत्यभूतांस्त्रियम् ८(ग्रामण्यम्) ग्रामनेतारम् ९(गणकम्) ज्योतिर्विदम् १०(अभिक्रोशकम्) निन्दकम् ११(तान्) त्रीन्(महसे) जुष्टंनियुनक्मीति एकादशेयूपे आलभते॥ एवंमतियूपमेकादश-स्वेकादशसुनियुक्तेषुयेऽधिकाअवशिष्टास्तान् समाप्तिपर्यन्तान्द्वितीयोच्छ्रिते यूपे नियुनक्तितानाह(वीणावादम्)१(पाणिघ्नम्) हस्त ताल वादकम् २(तूणवध्मम्) ३(तान्) त्रीन्(नृत्ताय) आलभते(आन्दादाय)

**कुन्तान्महसेवीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायानन्दाय तलवम्॥२०॥**

(तलवम्) वादकम् ।।वागतिगन्धनयोः गन्धनंहिंसातलं हस्तादितलंवाति वाद्यमुखं हन्ति सतलवस्तम् ४–॥२०॥ **अथाध्यात्मम्**–(नर्माय) परिहासाय(पुंश्चलूं थं) व्यभिचारिणीं वुद्धिवृत्तिम्(हसाये) हासाय)कारिम्) प्रश्नोत्तरसम्बान्धिनिक्रियाम्(यादसे) व्रह्मांभुरूपसमुद्रेप्रादुर्भूताय विराट्पुरुषाय(शावल्याम्)(श) शान्तरेववलो यस्यतत्सत्वगुणः शवलूस्तदपत्यभूतांसात्विकीं वुद्धिम्(ग्रामण्यम्) नरसमूहस्यनेतारम्(गणकम्) ज्योतिर्विदम्(अभिक्रोशकम्) अभक्तानांनिन्दकं(तान्) त्रीन् कामान्(महसे) दृष्टदेवोत्स-वाय(वीणावादम्)(पाणिघ्नम्)(तूणवध्मम्)(तान्) कामान्(नृत्ताय) आलभते(आनन्दाय) भक्तानन्दाय

(तलवम्) वाद्यवादकं मनो वृत्ति विशेषम् ॥ २० ॥

ॐ अग्नय इत्यस्य नारायण ऋषि र्भुरिगत्याष्टिश्छन्दो द्रव्यं दैवतम्—

**मंत्रार्थः**—(अग्नये) (पीवानम्) स्थूलम् ५ (पृथिव्यै) (पीठ सर्पिणम्) पीठेना सनेन सर्पति गच्छति पीठ सर्पीतं पुङ्गम् ६ (वायवे) (चाण्डालम्) चाण्डाल कर्म्माणम् ७ (अन्तरिक्षाय) (वंशनर्तिनम्) वंशेन नर्त्तन शीलम ८ दिवे) (खलतिम्) अलोमाशिरस्कम् खल्वाटम् ९ (सूर्याय) (हर्यक्षम्) हरित नेत्रम् १० (नक्षत्रेभ्यः) (किर्म्मिरम्)

अग्नये पीवानम्पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्त
रिक्षाय वꣳ शनर्त्तिनं न्दिवे खलतिꣳ सूर्य्याय हर्यक्षन्न
क्षत्रेभ्यः किर्म्मिरञ्चन्द्रमसे किलासमह्ने भुक्लम्पिङ्गाक्षꣳ
रात्र्यै कृष्णम्पिङ्गाक्षम् ॥ २१ ॥

कर्वुरवर्णम् ११ (चन्द्रमसे) (किलासम्) सिध्मरोगवन्तम् १२ (अह्ने) (भुक्लम्) भुक्लवर्णम् (पिङ्गाक्षम्) १३ (रात्र्यै) (कृष्णम्) कृष्ण वर्णम् (पिङ्गाक्षम्) १४—॥ २१ ॥

**अथाध्यात्मम्**—(अग्नये) जाठराग्नये (पीवानम्) (पीवा) जलं पीपाने (अनः) प्राणः। अप्प्राणसमूहम् (पृथिव्यै) (पीठसर्पिणम्) आसनस्थिति शीलं देहम् (वायवे) (चाण्डालम्) चण्डां तीव्रां गतिमलति स चण्डालः प्राणस्तस्य गतिम् (अन्तरिक्षाय) (वंशनर्त्तिनम्) वंशतुल्य नाडीषु नर्तन शीलं हृदयम् (दिवे)

१२५७ ([10] खलितम्) अलोमाशिरः ([11] सूर्याय) ([12] हर्यक्षमे) हरो सूर्येत दंशत्वेन व्याप्तं जीवात्मानम्। अक्ष व्यासौ ([13] नक्षेत्रे-
भ्यः) ([14] किर्म्मिरम्) चित्रवर्णयुक्तं कमलसमूहम् ([15] चन्द्रमसे) ([16] किलासमे) (क) देहः (डू) कामिनी (ल) पृथि
वी (आस) आसनं यस्य तन्मनः ([17] अह्ने) देवयान मार्गाय ([18] शुक्लम्) सात्विकम् ([19] पिङ्गाक्षम्) पिङ्गं दीपाशिखाव-
र्णी कारणशरीरं तेनाक्षं व्याप्तं जीवात्मानम् ([20] रात्र्यै) पितृयान मार्गाय ([21] कृष्णाम्) तामसम् ([22] पिङ्गाक्षम्) जीवा

अथैतानष्टौ विरूपानालभतेऽतिदीर्घञ्चातिह्रस्वञ्चातिस्थू
लञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चा

त्मानम् ॥२१॥ ओं अथैतानित्यस्य नारायण ऋषिर्निचृत्कृतिश्छन्दो द्रव्यं दैवतम्-

**मंत्रार्थः**- ([1] अथ) ([2] एतान्) ([3] अष्टौ) ([4] विरूपान्) परस्परं विरुद्ध रूपान्पशून् ([5] आलभते) तानाह ([6] अति दीर्घम्)
([7] च) ([8] अति ह्रस्वं) ([9] च) ([10] अतिस्थूलम्) ([11] च) ([12] अति कृशम्) ([13] च) ([14] अति शुक्लम्) ([15] च) ([16] अति कृष्णम्) ([17] च) ([18] अ-
तिकुल्वम्) रोमरहितम् ([19] च) ([20] अतिलोमशम्) सर्वाङ्ग व्यापिरोमाणम् ([21] च) ([22] ते) ([23] अशूद्राः) ([24] अब्राह्मणाः) शूद्र
ब्राह्मण व्यतिरिक्ताः पशवो भवन्ति ते ऽष्टावपि ([25] प्राजापत्याः) प्रजापति देवताः अष्टाउत्तमानालभत इत्युपक्रम्य
ते वै प्राजापत्या भवन्तीति १३।६।२।७-८ श्रुतेः अत्र जातिनियमात्पूर्वेषु जातेरनियमः। वीणावादादयश्चतु-

दृश्ञ्रतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः। तथा (मागधः)[२६] (पुंश्चली)[२७] (कितवः)[२८] (क्लीवः)[२९] (एते)[३०] चत्वारोऽपि अशूद्राः)[३१] (अब्राह्मणाः)[३२] शूद्रब्राह्मणव्यतिरिक्ताः (ते)[३३] (प्राजापत्याः)[३४] प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः। सर्वेषां नियोगान्तरं तान्नियुक्तान् पुरुषान् सहस्रशीर्षा पुरुष इति ३१।१—१६ षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होतृवदभिष्टौति। होतृवदिति प्रथमोत्तमयोस्त्रिश्चिनमऋगन्तानां प्रणवेन सन्धानञ्च यथा सहस्रशीर्षा पुरुषः० ङ्गुलोम् पुरुषएवेदꣳ—० रोहतोम्। एवमभिष्टौति। तत आलम्भन

तिलोमश्च। अशूद्रा अब्राह्मणास्ते प्राजापत्याः। मागधः पुंश्चली कितवः क्लीवोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः २२

क्रमेण यथादैवतं प्रोक्षणादि। ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मण इदं क्षत्राय इत्येवं सर्वेषां यथास्वस्वदेवतोद्देशेन त्यागः। ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति। तत अध्वर्युराज्यं संस्कृत्य सकृद्गृहीतमाज्यं गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्य आहवनीये जुहोति ओम् ब्रह्मणे स्वाहा १ क्षत्राय स्वाहा २ मरुद्भ्यः ३ तपसे ४ तमसे ५ इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसङ्ख्याभ्यः तावतीर्घृताहुतीर्हुत्वा स्विष्टकृतादि उदवसानीयान्तं कर्म कृत्वान्ते यजमानः अयं ते योनिरिति मंत्रेणात्मन्यग्नीन् समारोप्याग्नयः सम्भृत इ

॥ य० ॥ माध्यं० श्रा० ॥ वाज० सं० ॥

॥ अ० ३० ॥ कं० २२ ॥ १२५८ ॥

ति (३१ १७) षड्‌चेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा सन्न्यसेत् गार्हपत्ये धरारणि-मनुप्रप्रहृत्याहवनीयउत्तरारणिमात्मन्नग्नीसमारोप्यारण्यं व्रजेदिति शाङ्खायनोक्तेः यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्तेसायमाहुतीर्हुत्वारण्योरग्नीसमारोप्योत्तरनारायणेनार्कमुपस्थाय देवयजनमादीप्य गृहं व्रजेत् गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानापि कुर्यात्। अयमपि पक्षोऽस्ति तत्पुरुषमेधानन्तरं सन्न्यास एव ॥ २२ ॥

## अथाध्यात्मम्

## इति माध्यन्दिनीयायां वाजसनेयसंहितायां त्रिंशो ऽध्यायः ॥ ३० ॥

([१] अथ) ([२] एतान्) ([३] अष्टौ) ([४] विरूपान्) परस्परं विरुद्धरूपान् ([५] आलभते) तानाह ([६] अतिदीर्घम्) प्रधानरूपं शरीरम् ([७] च) ([८] अतिह्रस्वम्) विराजोत्पत्तिकारणं कर्मसमूहवीजम् ([९] च) ([१०] अतिस्थूलम्) विराट्‌देहम् ([११] च) ([१२] अतिकृशम्) अतिसूक्ष्मं हिरण्यगर्भशरीरम् ([१३] च) ([१४] अतिशुक्लम्) विष्णोपाधिम् ([१५] च) ([१६] अतिकृष्णम्) रुद्रोपाधिम् ([१७] च) ([१८] अति-कुल्वम्) यतीरूपावताराणां देहोपाधिम् ([१९] च) ([२०] अतिलोमशम्) गृहस्थादिरूपावताराणां देहोपाधिम् ([२१] च) ([२२] ते)

[२३](अम्भूद्राः) अदासाईशरूपत्वात् [२४](अब्राह्मणाः) प्रधानरूपत्वात्ते [२५](प्राजापत्याः) ब्रह्मदेवताः। ब्रह्म वै प्रजापतिः श्रा० १३।६।२।८ [२६](मागधः) (मा) माया (ग) गौरवं मायाया गौरवं धारयतीति तत् समष्टिमनः [२७](पुंश्चली) पुरुषस्य शक्तिभूत्वाऽपि प्रधानकार्ये ब्रह्माण्डे व्याप्ता समष्टिबुद्धिः [२८](कितवः) मायापाशे द्यूतकारकं समष्टिचित्तम् [२९](क्लीवः) ब्रह्मप्राप्तौ पुरुषार्थहीनो देहाभिमानरूपोऽहंकारः [३०](एते) [३१](अम्भूद्राः) अदासाः ईशाङ्गरूपत्वात् [३२](अब्राह्मणाः) प्रधानरूपत्वात् [३३](ते) [३४](प्राजापत्याः) ब्रह्मदेवताः यथा श्रुतिः अष्टाऽउत्तमानालभते अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य सर्वस्योत्तमं करोति तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः ते वै प्राजापत्या भवन्ति ब्रह्म वै प्रजापतिर्ब्रह्मो हि प्रजापतिस्तस्मात्प्राजापत्या भवन्ति १३।६।२।७-८-॥२२॥

इति श्रीभृगुवंशावतंसश्रीनाथूरामसूनुज्वालाप्रसादशर्म्मकृते यजुर्वेदीयब्रह्मभाष्ये नरमेधपशुवर्णनं नाम त्रिंशोऽध्यायः ३०॥

ॐनारायणंनमस्कृत्यनरञ्चैवनरोत्तमम्। देवींसरस्वतींव्यासंततोजयमुदीरयेत् १ पूर्वाध्याये व्यष्टिपुरुषान् समष्टिपुरुषायसमर्पयित्वाऽद्यतं महापुरुषं स्तौति॥ ॐसहस्रशीर्षेत्यस्यनारायणऋषिर्निचृदार्ष्यनुष्टुप्छन्दः पुरुषोदेवता

**मंत्रार्थः**– यः (पुरुषः) सर्वलोकेषु व्याप्तोमहानारायणः। यथाश्रुतिः इमेवैलोकाः पूरयमेव पुरुषोयोऽयंपवतेसोऽस्यांपुरिशेतेतस्मात्पुरुषः १३।६।२।१ (सहस्रशीर्षा) सर्वात्मरूपत्वादनन्तानि शीर्षाणि यस्य (सहस्राक्षः) अनन्तान्यक्षीणियस्य (सहस्रपात्) अनन्ताः पादायस्य (सः) (भूमिम्) व्यष्टिसमष्टिदेहरूपं स्थानं (सर्वतः) तिर्यक्ऊर्द्धमधश्च (स्पृत्वा) व्याप्य। स्पृणोतिर्व्याप्तिकर्मा (दशाङ्गुलम्) नाभेः सकाशाद्दशाङ्गुलपरिमितं देशं हृदयम् (अति) अतिक्रम्य (अतिष्ठत्) अन्तर्यामिरूपेणावस्थितः॥१॥ ॐपुरुष इत्यस्यविनियोगः पूर्ववत्–

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिꣳ सर्वतस्पृत्वा त्यतिष्ठद्दशाङ्गुलम्॥१॥ पुरुषएवेदꣳ सर्वं यद्भूतं यच्चभाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥२॥ एतावानस्यमहिमा तोज्यायाँश्च पूरुषः। पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि॥३॥

**मंत्रार्थः**–(इदम्) (यत्) (भूतम्) अतीतं ब्रह्मसंकल्पजंजगत् (च) (यत्) (भाव्यम्) भविष्यंब्रह्मसंकल्पजंजगत् (उत) अपिच (यत्) जगत् (अन्नेन) वीजानान्नपरिणामेन वीर्येण वा (अतिरोहति) वृक्षनरपश्वादिरूपं प्राप्नोतितत् (सर्वम्) (अमृतत्वस्य) मोक्षस्य (ईशानः) स्वामी (पुरुषः) महानारायणः (एव) तस्यान्याभावात्॥२॥

ॐ एनावानित्यस्य विनियोगः पूर्ववत्-

**मंत्रार्थः**-[1](अस्य) महानारायणस्य [2](महिमा) विभूतिः [3](एतावान्) इति न [4](च) चिदात्मा [5](पुरुषः) महानारायणः [6](अतः) संसारात् [7](ज्यायान्) अतिशयेनाधिकः यस्मात् [8](विश्वा) विश्वानि [10](भूतानि) ब्रह्माण्डानि [11](अस्य) महानारायणस्य [12](पादः) चतुर्थांशः [13](दिवि) गोलोके [14](अस्य) [15](त्रिपादस्य) स्वरूपम् [16](अमृतम्) विनाशरहितम् यस्मादनन्तं ब्रह्मैव स्वभागे स्वज्योतिषा महानारायणरूपोऽभवत् ॥ ३॥

**त्रिपादूर्द्ध उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विश्वङ् व्यक्राम**
**त्साशनानशने अभि ॥ ४॥ ततो विराडजायत विराजो अधि पूरुषः**
**स जातोऽत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५॥**

ॐ त्रिपादूर्द्ध इत्यस्य नारायण ऋषिरार्ष्यनुष्टुप् छन्दः पुरुषो देवता-

**मंत्रार्थः**-[1](त्रिपात्) [2](पुरुषः) महानारायणः [3](ऊर्द्धः) ब्रह्माण्डादूर्ध्वम् [4](उदैत्) उत्कर्षेणास्थितवान् [5](पुनः) [6](अस्य) महानारायणस्य [7](पादः) चतुर्थांशः [8](इह) संसारे [9](अभवत्) व्याप्तोऽभवत् [10](ततः) मायाप्रवेशानन्तरं [11](विश्वङ्) विषुसर्वत्राञ्चतीति विश्वङ् देवतिर्यगादिरूपेण विविधः सन् [12](साशनानशने) अशनेन सह वर्त्तमानं साशनमशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकं [13](अभि) अभिलक्ष्य [14](व्यक्रामत्) व्याप्तवान् यथा भगवद्वाक्यं विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति ॥ ४॥

ॐतत इत्यस्य विनियोगः पूर्ववत्-

**मंत्रार्थः**- ([1]ततः) महानारायणात् ([2]विराट्) ब्रह्माण्डदेहः। तथा ([3]विराजः) तद्देहाभिमानी ([4]पूरुषः) ([5]अधि) तमेव
देह माधिकरणं कृत्वा ([6]अजायत) ([7]सः) ([8]जातः) विराट् पुरुषः ([9]अत्यरिच्यत) अतिरिक्तो देवतेशोभूत ([10]पश्चात्) ([11]भूमिम्)
ससर्ज ([12]अथ) तदनन्तरम् ([13]उ) एव ([14]पुरः) देवमनुष्यादीनां शरीराणि ससर्ज ॥५॥

ॐतस्मादित्यस्य नारायणऋषिरार्चीपंक्तिश्छन्दः पुरुषोदेवता- **मंत्रार्थः**- ([1]तस्मात्) ([2]यज्ञात्) महानारायणा-

**तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम्। पशूँस्ताँश्चक्रे वायव्या**
**नारण्याग्राम्याश्च ये॥६॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि ज-**
**ज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥७॥**

त् ([3]सर्वहुत) सर्वं हूयते यस्मिन् तत् ([4]पृषदाज्यम्) दधिमिश्रमाज्यं प्राणं वा। प्राणोहि पृषदाज्यमन्नं हि प्राणः श०
३।८।४।८। ([5]सम्भृतं) सम्पादितम् तथा स महानारायणः ([6]तान्) ([7]वायव्यान्) वायुः प्राणो वा देवता येषां तान् ([8]पशू
न्) ([9]चक्रे) ([10]ये) ([11]आरण्याः) अरण्येभवाः हरिणादयः यद्वा आरण्यकाण्डसम्बन्धीन्द्रियाणि ([12]च) ([13]ग्राम्याः) ग्राम
भवा अश्वादयः यद्वा ग्रामवृत्तमार्गसम्बन्धीन्द्रियाणि॥६॥ ॐतस्मादित्यस्य नारायणऋषिरार्ष्यनुष्टुप् छन्दो पुरुषो-
देवता- **मंत्रार्थः**- ([1]तस्मात्) ([2]सर्वहुतः) सर्वैर्हूयते तस्मात् ([3]यज्ञात्) यज्ञपुरुषात् महानारायणात् ([4]ऋचः) ([5]सा
मानि) ([6]जज्ञिरे) उत्पन्नानि ([7]तस्मात्) महानारायणात् ([8]छन्दांसि) ([9]जज्ञिरे) ([10]तस्मात्) महानारायणात् ([11]यजुः) ([12]अजायत)

॥७॥ ॐ तस्मादश्वा इत्यस्य नारायण ऋषिर्निचृदार्ष्यनुष्टुप् छन्दो पुरुषो देवता–

**मंत्रार्थः**–(तस्मात्) महानारायणात् (अश्वाः) (च) (ये) (के) अश्वातिरिक्ता गर्दभादयो भूतानि (उभयादतः) ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽपि। छान्दसं दीर्घम् (अजायन्त) (ह) स्फुटं (तस्मात्) महानारायणात् (गावः) (जज्ञिरे) (तस्मात्) महानारायणात् (अजावयः) अजाः अवयश्च (जाताः) ॥८॥

ॐ तं यज्ञमित्यस्य विनियोगः पूर्ववत्– **मंत्रार्थः**–(ये) (साध्याः) (देवाः) (च) (ऋषयः) सनकादयस्ते (अग्रतः) सृष्टेः पूर्वं (जातम्) उत्पन्नम् (तम्) (यज्ञम्) यज्ञसाधनभूतम् (पुरुषम्) विराट्पुरुषम् (बर्हिषि) आत्मलोके। अ

**तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥**

यं वै लोको बर्हिः श० १।४।१।२४ (प्रौक्षन्) प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः (तेन) विराट्पुरुषरूपेण पशुना (अयजन्त) मानसयागं निष्पादितवन्तः ॥९॥ ॐ यत्पुरुषमित्यस्य विनियोगः पूर्ववत्–

**मंत्रार्थः**–प्रश्नः (यत्) यदा (पुरुषम्) विराट्पुरुषम् (व्यदधुः) महानारायणेन प्रेरिता महदहङ्कारादय उत्पादयन्तदा (कतिधा) कतिभिः प्रकारैः (व्यकल्पयन्) विविधं कल्पितवन्तः (अस्य) विराट्पुरुषस्य (मुखम्) (किम्) (आसीत्) (किम्) (बाहू) (ऊरू) चास्ताम् (किम्) (पादौ) (उच्येते) ॥ १०॥

१२६५ ओंब्राह्मणोऽस्येत्यस्य विनियोगः पूर्ववत्- **मंत्रार्थः**- पूर्वोक्तप्रश्नोत्तरमाह ([1]ब्राह्मणः)([2]अस्य) विराट्पुरुषस्य ([3]मुखम्)([4]आसीत्) मुखादुत्पन्ना ([5]राजन्यः) क्षत्रियः ([6]बाहू कृतः) बाहुत्वेन निष्पादितः ([7]अस्य)([8]यत्) यौ ([9]ऊरू)([10]तत्) तद्रूपः ([11]वैश्यः)([12]पद्भ्याम्)([13]शूद्रः)([14]अजायत) उत्पन्नः ॥ ११॥ ओंचन्द्रमेत्यस्य नारायण ऋषिरार्ष्यनुष्टुप् छन्दः पुरुषो देवता [1] **मंत्रार्थः**-(मनसः) विराट्पुरुषस्य मनःशक्तेः([2]चन्द्रमा)([3]जातः)([4]चक्षोः) चक्षुषः सकाशात्([5]सूर्यः)([6]अजायत)([7]श्रोत्रात्) कर्णात्([8]वायुः)([9]च)([10]प्राणः) अजायत([11]च)([12]मुखात्)([13]अग्निः)([14]अजायत) ॥ १२॥

**यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥ १०॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ ११॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ १२॥**

ओंनाभ्या इत्यस्य विनियोगः पूर्ववत्- **मंत्रार्थः**-([1]नाभ्याः) नाभेः सकाशात्([2]अन्तरिक्षम्)([3]आसीत्)([4]शीर्ष्णः) शिरसः([5]द्यौः) स्वर्गः([6]समवर्तत) उत्पन्ना([7]पद्भ्याम्)([8]भूमिः) उत्पन्ना([9]श्रोत्रात्)([10]दिशः) उत्पन्नाः([11]तथा) तेनोक्तविधिना-([12]लोकान्) भूरादीन्([13]अकल्पयन्) विराट्पुरुषस्य देहात् ॥ १३॥ ओंयत्पुरुषेणेत्यस्य नारायण ऋषिर्निचृदार्ष्यनुष्टुप् छन्दो यज्ञो देवता- **मंत्रार्थः**-([1]यत्) यदा([2]देवाः) विद्वांसः। विद्वांसो हि देवाः श० ३।७।३।१० ([3]पुरुषेण) विराट्देहरूपेण([4]हविषा) अन्नं वै विराट् श० १२।२।४।५ ([5]यज्ञम्) ज्ञानयज्ञम्([6]अतन्वत) तदा([7]अस्य) ज्ञानयज्ञस्य

(वसन्तः) ऋतुः (आज्यम्) (आसीत्) (ग्रीष्मः) (इध्मः) तथा (शरत्) (हविः) (आसीत्) ॥ १४ ॥

ओं सप्तास्येत्यस्य नारायण ऋषिः अनुष्टुप् छन्दो यज्ञो देवता—

मंत्रार्थः—(यत्) यदा (यज्ञम्) ज्ञानयज्ञम् (तन्वानाः) कुर्वाणाः (देवाः) विद्वांसः (पुरुषम्) विराट् पुरुषरूपम् (पशुम्) (अबध्नन्) भावितवन्तस्तदा (अस्य) ज्ञानयज्ञस्य (सप्त) गायत्र्यादीनि छन्दांसि क्षीरादयः समुद्रा वा (परिधयः) (आसन्) (त्रिः सप्त) द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एते एकविंशतिः यद्वा गायत्र्या-

नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत। पद्भ्यां भूमिर्दिशः श्रोत्रा त्तथा लोकाँ२ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधय स्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। ते ह नाकं महिमा

दीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्त छन्दांसि (समिधः) (कृताः) ॥ १५ ॥

ओं यज्ञेनेत्यस्य नारायण ऋषिर्भुरिगुष्णिक् छन्दो यज्ञो देवता— मंत्रार्थः—(देवाः) विद्वांसः (यज्ञेन) विराड्रूप-हविः सम्बन्धिज्ञानयज्ञेन (यज्ञम्) यज्ञपुरुषं महानारायणम् (अयजन्त) पूजितवन्तः (तानि) महानारायण-पूजनसम्बन्धीनि (धर्म्माणि) (प्रथमानि) मुख्यानि (आसन्) (यत्र) महानारायणलोके (पूर्वे) (साध्याः) (सन्ति) ति-

श्नुवन्ति तम् (नाकम्) दुःखरहितं लोकम् (ह) एव (ते) (महिमानः) महानारायणस्य भक्ता महात्मानः (सचन्त) आसक्ताः
॥१६॥ इति पुरुषसूक्तानुवाकः ॐ अद्भ्य इत्यस्य नारायण ऋषिः भुरिगार्षी त्रिष्टुप् छन्दः आदित्यो देवता–
मंत्रार्थः– उत्तरनारायणोपासना यजमानस्य सायुज्यं वर्णयति (पृथिव्यै) पृथिव्याः (देहस्य) (रसात्) इन्द्रियस
मूहात् (च) (अद्भ्यः) कमलान्तरिक्षेभ्यः आप इति अन्तरिक्षनामनिघं० (सम्भृतः) संहृतो अंगुष्ठमात्रजीवः (विश्वे
कर्म्मणः) महानारायणस्य (अग्रे) समीपे (समवर्त्तत) (त्वष्टा) महानारायणः (तस्य) जीवात्मनः (रूपम्) स्वलो

**नस्सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥१६॥ अद्भ्यः सम्भृतः पृथिव्यै**
**रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे। तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्य**
**स्य देवत्वमाजानमग्रे ॥१७॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्त**
**मसः परस्तात्। तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१८॥**

कोऽन्वितम् (विदधत्) ददत्पुनस्तम् (एति) प्राप्नोति (अग्रे) श्रेष्ठकाले कृतयुगे (मर्त्यस्य) मनुष्यस्यानन्यभ
क्तस्य (तत्) (आजानम्) मुख्यम् (देवत्वम्) ॥१७॥ ॐ वेदाहमित्यस्य नारायण ऋषिर्निचृदार्षी त्रिष्टुप् छन्दः
पुरुषो देवता **मंत्रार्थः**– मंत्रः कथयति (अहम्) (एतम्) (आदित्यवर्णम्) आदित्यस्येव वर्णो यस्य तम्
(तमसः) (परस्तात्) अविद्याया शून्यं ज्ञानस्वरूपम् (महान्तम्) (पुरुषम्) महानारायणम् (वेद) जानामि (तम्)
(एव) महानारायणमेव (विदित्वा) ज्ञात्वा (मृत्युम्) (अति) अतिक्रम्य (एति) प्राप्नोति (अयनाय) साम्भया

य (अन्यः) (पन्था) मार्गः (न) (विद्यते) ॥ १८ ॥ ओंप्रजापतिरित्यस्यनारायणऋषिर्भुरिगार्षीत्रिष्टुप्छन्दः पुरुषो देवता १ मंत्रार्थः- (प्रजापतिः) ब्रह्मा (गर्भे) (अन्तः) गर्भमध्ये (चरति) प्राप्तो भवति (जायमानः) सन् (बहुधा) देवतिर्यङ्मनुष्यादिरूपेण (विजायते) उत्पद्यते (धीराः) ब्रह्मविदः (तस्य) ब्रह्मणः (योनिम्) महानारायणम् (परिपश्यन्ति) (यस्मिन्) (ह) यस्मिन्नेव (विश्वा) विश्वानिसर्वाणि (भुवनानि) ब्रह्माण्डाणि (तस्थुः) स्थितानि ॥ १९ ॥ ओंयोदेवेभ्य इत्यस्यनारायणऋषिरार्ष्युष्णिक् छन्दः पुरुषो देवता-

**प्रजापतिश्चरतिगर्भेऽअन्तरजायमानो बहुधाविजायते। तस्ययोनिम्परि पश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा ॥ १९ ॥ योदेवेभ्यऽआत पतियोदेवानाम्पुरोहितः पूर्व्वोयोदेवेभ्योजातोनमोरुचाय ब्राह्मये ॥ २० रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्रेतदब्रुवन्। यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवा ऽअसन्वशे ॥ २१ ॥**

मंत्रार्थः- (यः) महानारायणः (देवेभ्यः) सूर्यचन्द्रादिभ्यः (आतपति) स्वप्रकाशंददाति (यः) (देवानाम्) ब्रह्मविष्णुमहेशानाम् (पुरोहितः) अग्रेहितकरः पूज्यश्च (यः) (देवेभ्यः) ब्रह्मविष्णुमहेशेभ्यः (पूर्वः) (जातः) प्रादुर्भूतस्तस्मै (ब्राह्मये) (रुचाय) ब्रह्मसम्बन्धिज्योतिषे (नमः) ॥ २० ॥ ओंरुचमित्यस्यनारायणऋषिरार्ष्यनुष्टुप् छन्दः पुरुषोदेवता- मंत्रार्थः- (अग्रे) कृतयुगे (तत्) (ब्राह्मम्) (रुचम्) ब्राह्मज्योतिः स्वरूपंमहानारायणम् (जनयन्तः)

ज्ञानगोचरं कृतवन्तः (देवाः) विद्वांसः (अब्रुवन्) (यः) (ब्राह्मणः) ब्रह्मज्ञानी (त्वा) त्वाम् (एवम्) पूर्वोक्तप्रशंसायुक्तम् (विद्यात्) जानीयात् (देवाः) सर्वे देवाः (तस्य) ब्रह्मनिष्ठस्य (वशे) (असन्) भवन्ति महानारायणोपासको जगत्पूज्यो भवति २१

ॐ श्रीश्चत इत्यस्य नारायण ऋषिर्निचृदार्षी त्रिष्टुप् छन्दः पुरुषो देवता १

**मंत्रार्थः**– हे महानारायण (श्रीः) (च) (लक्ष्मीः) (ते) (पत्न्यौ) जायास्थानीये (च) (अहोरात्रे) ब्रह्मणो ऽहोरात्रे तव (पार्श्वे) पार्श्वस्थानीये (नक्षत्राणि) क्षतात्संसाररोगान्न रक्षन्ति तानि देवमनुषादि शरीराणि (रूपम्) (अश्विनौ)

**श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्**
**इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण २२**

**इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकत्रिंशोऽध्यायः ३१**

नरनारायणौ तव (व्यात्तम्) विकासितं मुखम् (इष्णन्) स्वयमिच्छन् सन् इष इच्छायाम् (इषाण) स्वात्मानं प्रापय इष गतौ (अमुम्) स्वर्लोकम् (मे) (इषाण) प्रापय (सर्वम्) योगैश्वर्यम् (मे) (इषाण) प्रापयेति प्रार्थना २२

इति श्रीभृगुवंशावतंसश्रीनाथूरामसूनुज्वालाप्रसादशर्म्मकृते यजुर्वेदीयब्रह्मभाष्ये महानारायणार्चनं नामैकत्रिंशोऽध्यायः ॥३१॥ ॐ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् १

अथ सर्वमेधमंत्रा उच्यन्ते ॥ ॐ तदेवाग्निरित्यस्य स्वयम्भुर्ऋषिरनुष्टुप् छन्दः पुरुषो देवता–

यथा श्रुतिः ब्रह्म वै स्वयम्भु तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूता

निचात्मनीतिब्रह्सर्वेषु भूतेष्वात्मान थं हुत्वाभूतानिचात्मनि सर्वेषांभूताना ७ं श्रैष्ठ्य ७ं स्वाराज्यमाधिपत्यंपर्यै-
त्तथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वासर्वाणि भूतानि श्रैष्ठ्य ७ं स्वाराज्यमाधिपत्यंपर्येति सवाऽएषसर्वमेधो
दशरात्रो यज्ञक्रतुर्भवति दशाक्षरा विराड्विराडु कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नाग्निं परार्ध्यंचि
नोति परमोवाऽएष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनं परमतां गमयति श० १३।७।१।१-२-

**मंत्रार्थः**–(अग्निः)(तत्)ब्रह्म(एव)(आदित्यः) सूर्यः (तत्) ब्रह्मैव (वायुः) (तत्) ब्रह्मैव (चन्द्रमाः) (तत्) (उ) वह्मै-

तदे॒वाग्निस्तदा॑दि॒त्यस्तद्वा॒युस्तदु॑च॒न्द्रमाः। तदेव शु॒क्रन्तद्ब्र॒ह्मतआ
पः॒स प्र॒जापतिः॥ १॥ सर्वे॑निमे॒षाजज्ञिरे वि॒द्युतः॒ पुरु॑षा॒दधि। नैन मूर्द्धन्न
ति॒र्य्यञ्चन्नमध्ये परिजग्रभत्॥ २॥ नतस्य॑प्रति॒मा॑ऽअस्ति॒ यस्य॒नाम॑म॒ह
द्यशः। हि॒र॒ण्य॒गर्भइत्येषः मामाहि थं सी॒दित्येषायस्मा॒न्नजात इत्येषः ३

व (शुक्रम्) संसारवीजम् (तत्) (एव) ब्रह्मैव (ताः) प्रसिद्धाः (आपः) (स) (प्रजापतिः) ईश्वरः (तत्) (ब्रह्म) सर्व
खल्विदंब्रह्म नेहनानास्ति किंचनेत्यर्थः॥ १॥ ओंसर्वेनिमेषाइत्यस्याविनियोगः पूर्ववत्
**मंत्रार्थः**–(विद्युतः) विशेषेण द्योतते विद्युत् तस्मात् (पुरुषात्) महानारायणात् (सर्वे) (निमेषाः) कालाः (अ
धिजज्ञिरे) कश्चिदपि (एनम्) महानारायणम् (ऊर्द्धम्) उपरिभागे (न) (परिजग्रभत्) परिगृह्णाति (न) (तिर्य-
ञ्चम्) चतुर्दिक्षु (न) (मध्ये) मध्यदेशे गृह्णाति यस्मान्न ह्यसौ प्रत्यक्षादीनां विषयः॥ २॥

॥ य० ॥ माध्यं० शा० ॥ वाज० सं० ॥

॥ अ० ३२ ॥ कं० ॥ ३ ॥ १२७० ॥

ऊँ नतस्येत्यस्य स्वयम्भुर्ऋषिर्द्विपदा गायत्री छन्दः पुरुषो देवता- **मंत्रार्थः**-(तस्य) महानारायणस्य (प्रतिमा) प्रतिमानमुपमानं किंचिद्वस्तु (न) (अस्ति) (यस्य) महानारायणस्य (नाम) (महद्यशः) शेषाः संकेतिता मंत्रा व्याख्याताः हिरण्यगर्भ इत्येषोनुवाकश्चतुर्ऋचः (२५, १०-१३) मामाहिंसीदित्येषा (१२, १-२) यस्मान्नजात इत्येषः (८, ३६-३७) एता ब्रह्मयज्ञे जपे च सर्वाश्च ध्येयाः-३॥

ऊँ एषो हेत्यस्य स्वयम्भुर्ऋषिस्त्रिष्टुप् छन्दः पुरुषो देवता- **मंत्रार्थः**-(एषः) (ह) एव (देवः) महानारायणः

एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः॥ ४॥ यस्माज्जातं न पुरा किंचनैव य आबभूव भुवनानि विश्वा। प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ५

(सर्वाः) (प्रदिशः) (अनुतिष्ठति) व्याप्यास्थितः (जनाः) हे भक्तजनाः (ह) प्रसिद्धमेष (पूर्वः) (जातः) सर्वेषां पूर्वमेव प्रादुर्भूतः ब्रह्मभावान्महानारायणरूपं प्राप्तः (गर्भे) ब्रह्माण्डगर्भे (अन्तः) मध्ये (सः) (उ) एव (जातः) (जनिष्यमाणः) उत्पत्स्यमानः (सः) (एव) (प्रत्यङ्) प्रति पदार्थमञ्चति प्रत्यङ् (सर्वतोमुखः) (सः) स एव॥ ४॥

ऊँ यस्मादित्यस्य विनियोगः पूर्ववत्- **मंत्रार्थः**-(यस्मात्) महानारायणात् (पुरा) (किंचन) किमपि चैतन्यमन्यत् (न) (जातम्) (यः) महानारायणः (एव) (विश्वा) विश्वानि सर्वाणि (भुवनानि) ब्रह्माण्डानि भूतजा

तानिवा (आवभूव) अन्तर्भूतोऽएयर्थः (सः) (षोडशी) षोडशकलासम्पन्नः (प्रजापतिः) प्रजानां पालको महानारायणः (प्रजया) नानादेहरूपया (संरराणः) आत्मरूपेण क्रीडमानः (त्रीणि) (ज्योतींषि) रवीन्द्वग्निरूपाणि (सचते) सेवते तेषां रूपेण प्रादुर्भवति॥५॥ ओंयेनेत्यस्य विनियोगः पूर्ववत् **मंत्रार्थः**–(येन) महानारायणेन (द्यौः) (उग्रा) उद्गूर्णा वृष्टिकरणेऽउद्यता (च) (पृथिवी) (दृढा) सर्वप्राणिधारणं व्यष्टिग्रहणमन्ननिष्पादनञ्चेति भूमेर्दार्ढ्यम् (येन) महानारायणेन (स्वः) स्वर्गः (स्तभितम्) स्तम्भितम् (येन) महानारायणेन (नाकः) दुःखरहितो गोलोको भक्तानां दृष्टिगोचरः (यः) महानारायणः (अन्तरिक्षे) नभसि (रजसः) जलस्य (विमानः) निर्म्माता तस्मै (कस्मै) महा-

**येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः। योऽअन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥६॥ यं क्रन्दसीऽअवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम। आपो ह यद्बृहतीर्य्य**

नारायणाय (हविषा) हविः (आविधेम) दद्मः॥६॥ ओंयमित्यस्य विनियोगः पूर्ववत्–

**मंत्रार्थः**–(अवसा) हविर्लक्षणेनान्नेन वृष्टिजनकेन (तस्तभाने) प्राणिजातं स्तम्भयन्त्यौ। व्यत्ययेन स्तम्भेर्ह्रीदित्वम् (रेजमाने) शोभमाने (क्रन्दसी) द्यावापृथिव्यौ (मनसा) (यम्) महानारायणम् (अभ्यैक्षेताम्) साधु कृत मित्यपश्यताम् (यत्र) द्यावापृथिव्योः (सूरः) सूर्यः (उदितः) सन् (अधिविभाति) अधिकं शोभते विभावयति वा तस्मै (कस्मै) (देवाय) महानारायणाय (हविषा) हविः (आविधेम) दद्मः द्वे प्रतीकोक्ते जपादावध्येये व्याख्याते (२७, २५-२६)॥७॥

अथाध्यात्मम्· (अवसा) इन्द्रियशक्तीरूपान्नेन (तस्तभाने) आत्मप्रतिविंवंस्तम्भयन्त्यौ (रेजमाने) दीप्यमाने (क्रन्दसी) हृदयभृकुट्यौ (मनसा) सह (यम्) महानारायणम् (अभ्यैक्षेताम्) समन्तादपश्यताम् (यत्र) महानारायणे (सूरः) मानससूर्यः (उदितः) सन् (आधिविभाति) शोभते तस्मै (कस्मै) (देवाय) महानारायणाय (हविषा) आत्मप्रतिविंवम् (आविधेम) दद्मः ॥७॥ ओंवेनइत्यस्य स्वयम्भुर्ऋषिर्निचृदार्षीत्रिष्टुप् छन्दः पुरुषो देवता-

मंत्रार्थः-(वेनः) पण्डितोविदितवेदान्तरहस्यः (तत्) (गुहानिहितम्) बुद्धौहृदयेवास्थितम् (सत्) नित्यम्ब्रह्म (पश्यत्) पश्यतिजानाति (यत्र) ब्रह्मणि (विश्वम्) कार्य्यजातम् (एकनीडम्) एकस्यैवमहानारायणस्य वास-

**श्विदापः ॥७॥ वेनस्तत्पश्यन्निहितङ्गुहासद्यत्र विश्वम्भवत्येकनीडम्। तस्मिन्निदꣳ संचविचैतिसर्वꣳ सओतः प्रोतश्चविभूः प्रजासु ॥८॥ प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्वोधामविभृतङ्गुहासत्। त्रीणिपदानिनिहितागुहास्ययस्तानिवेदस**

स्थानम् (भवति) (च) (तस्मिन्) ब्रह्मणि (इदम्) (सर्वम्) भूतजातम् (समेति) संहारकालेसङ्गच्छते (च) (वि) व्येति-सर्गकालेनिर्गच्छति (च) (सः) (विभूः) महानारायणः (प्रजासु) (ओतः) (प्रोतः) व्याप्तः ॥८॥

ओंप्रतद्वोचेदित्यस्य स्वयम्भुर्ऋषिर्भुरिगार्षीत्रिष्टुप् छन्दः पुरुषो देवता- **मंत्रार्थः**-(गन्धर्वः) वेदवाचांधारकः (विद्वान्) पंडितः (नु) क्षिप्रम् (अस्य) महानारायणस्य (तत्) (अमृतम्) शाश्वतम् (गुहासत्) बुद्धौहृदयेवाविद्यमानम् (धाम) तेजःस्वरूपम् (विभृतम्) विहतंनानारूपैर्विराट्ब्रह्माविष्णुशिवादिभिर्विभक्तमेकंपदम् (प्रवोचेत्) प्रब्रूयात्

(त्रीणि) (पदानि) (गुहानिहिता) गुहानिहितानि महानारायणलोके स्थितानि (यः) (तानि) (वेद) जानाति (सः) (पितुः) ब्रह्मणोऽपि (पिता) विष्णुभावसम्पन्नः (असत्) भवति यथा भगवद्वाक्यं। बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति॥९॥ ओं सनवन्धुरित्यस्य विनियोगः पूर्ववत्-१

**मंत्रार्थः** (सः) महानारायणः (नः) अस्माकं (वन्धुः) (जनिता) पिता (सः) (विधाता) धारयिता (सः) (विश्वा) (विश्वानि) सर्वाणि (भुवनानि) भूतजातानि (धामानि) स्थानानि (वेद) सर्वात्मकत्वात् (देवाः) (यत्र) महानारायणे (अमृतम्) मो

**पितुः पितासत्॥९॥ सनोवन्धुर्ज्जनितासविधाता धामानि वेद भुवनानि विश्वा। यत्र देवाअमृतमानशानास्तृतीये धामन्नध्यैरयन्त॥१०॥ परीत्य भूतानि परीत्य लोकान्परीत्य सर्व्वाः प्रदिशो दिशश्च। उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश॥११॥**

क्षप्रापकं ज्ञानम् (आनशानः) व्याप्नुवानाः प्राप्ताः सन्तः। अश्नुवते आनशानाः वहुलं छन्दसीति अशेर्ह्लादित्वेन द्विः त्वे शानच् विभ्यासस्य नुगागमः (तृतीये) (धामन्) धामनि स्थाने स्वर्गे (अध्यैरयन्त) स्वेच्छया वर्त्तन्ते मोदन्ते॥१०॥ ओं परीत्येत्यस्य स्वयुम्भुर्ऋषिः र्निचृदार्षी त्रिष्टुप् छन्दोऽनन्यभक्तो देवता-१

**मन्त्रार्थः**- अनन्यभक्तस्य ज्ञाननिष्ठस्य मुक्तिं वर्णयति (भूतानि) सर्वभूतानि (परीत्य) ब्रह्मत्वेन विज्ञाय (लोकान्) भूरादीन् (परीत्य) ब्रह्मरूपान् ज्ञात्वा (सर्वाः) (प्रदिशः) (च) (दिशः) (परीत्य) तद्रूपान् ज्ञात्वा (प्रथमजाम्) प्रथमोत्पन्नां

२२७५ त्रयीरूपांवाचम् (उपस्थाय) संसेव्य यज्ञमुपासनाञ्च कृत्वा (आत्मनो) जीवात्मना (ऋतस्य) सत्यस्य ब्रह्मणः (आ
त्मानम्) स्वरूपं महानारायणम् (अभिसंविवेश) प्रविशति तस्य सायुज्यं प्राप्नोति॥ ११॥

ओं परीत्यस्य स्वयम्भुर्ऋषि सर्षी त्रिष्टुप् छन्दः कैवल्य मोक्षार्हो देवता १ **मंत्रार्थः** — (द्यावापृथिवी) (सद्यः) (परीत्य) तद्रूपेण ज्ञात्वा (लोकान्) (परि) परीत्य ब्रह्मरूपान् ज्ञात्वा (दिशः) (परि) परीत्य तद्रूपान् ज्ञात्वा (स्वः) सूर्यम् (परि) परीत्य ब्रह्मरूपं ज्ञात्वा (ऋतस्य) यज्ञस्य (तन्तुम्) कर्त्तव्यताम् (विततम्) प्रसारितं यथा तथा (विचृत्य)

**परिद्यावापृथिवीसद्यइत्वापरिलोकान्परिदिशः परिस्वः ऋतस्यतन्तुंविततं विचृत्यतदपश्यत्तदभवत्तदासीत्॥ १२॥ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम्। सनिम्मेधामयासिषं स्वाहा॥ १३॥ याम्मेधान्देवगणाः पितरश्चोपासते। तयामामद्यमेधयाग्नेमेधाविनङ्कुरुस्वाहा॥ १४॥**

समाप्य भक्तियज्ञं ज्ञानयज्ञञ्च कृत्वा (तत्) ब्रह्म (अपश्यत्) (तत्) ब्रह्म (अभवत्) (तत्) ब्रह्म (आसीत्) वस्तुगत्या तदेवास्ति। अज्ञाननिवृत्तिरेव दर्शनं भवनंचेति भावः। तदेवसन्तस्तदुतद्भवामेति श्रुतेः ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः॥ १२॥ ओं सदसस्पतिरित्यस्य स्वयम्भुर्ऋषिर्भुरिगार्षी गायत्री छंदः प्रार्थना देवता १ **मंत्रार्थः** — इत उत्तरमृक्त्रये मेधा याच्यते चतुर्थ्यामग्नीर्याच्यते (सदसः) यज्ञगृहस्य (पतिम्) पालकम् (अद्भुतम्) अचिन्त्यशक्तिम् (इन्द्रस्य) परमेश्वरस्य (प्रियम्) (काम्यम्) मेधार्थिभिः कामनीयमग्निमात्मानं वा

(सनिम्) धनस्ययोगैश्वर्यस्यवादानम् (मेधाम्) धारणावतीं बुद्धिम् (अयासिष थ्ठं) याचेद्धिकर्म्मकः (स्वाहा) नस्मैसुः

कृतमस्तु॥ १३॥ ओंयामित्यस्यस्वयम्भुर्ब्रर्षिर्निचृदार्ष्यनुष्टुप् छन्दोऽग्निर्देवता १

**मंत्रार्थः**- हे (अग्ने) अग्नेआत्माग्नेवा (अद्य) (तया) (मेधया) (माम्) (मेधाविनम्) (कुरु) (याम्) (मेधाम्) (देव गणाः) (च) (पितरः) (उपासते) (स्वाहा) तुभ्यंसुकृतमस्तु॥ १४॥ ओंमेधाम्मइत्यस्यस्वयम्भुर्ब्रर्षिर्निचृदार्षीबृहती छन्दः प्रार्थनादेवता १ **मंत्रार्थः**-(वरुणः) (मे) मह्यं (मेधाम्) (ददातु) (अग्निः) (प्रजापतिः) च (मेधाम्) ददातु (च)

**मेधाम्मेवरुणोददातुमेधामग्निः प्रजापतिः। मेधामिन्द्रश्श्ववायुश्श्वमेधान्धातादददातुमेस्वाहा॥ १५॥ इदम्मेब्रह्मचक्षत्रञ्चोभेश्रियमश्नुताम्। मयिदेवादधतुश्रियमुत्तमान्तस्यैतेस्वाहा॥ १६॥**

**इतिमाध्यन्दिनीयायांवाजसनेयसंहितायांद्वात्रिंशोऽध्यायः॥ ३२॥**

(इन्द्रः) (च) (वायुः) (मेधाम्) ददातु (धाता) (मे) (मेधाम्) (ददातु) (स्वाहा) सुकृतमस्तु॥ १५॥

ओंइदम्मइत्यस्यस्वयम्भुर्ब्रर्षिरार्ष्यनुष्टुप् छन्दः प्रार्थनादेवता १ **मंत्रार्थः**-(इदम्) (मे) मम (ब्रह्म) ब्राह्मणजातिर्मनोवा (च) (क्षत्रम्) क्षत्रियजातिः प्राणोवा। मनो वै ब्रह्मप्राणोवै क्षत्रमिति श्रुतेः (उभे) (श्रियम्) लक्ष्मीं योगलक्ष्मीम्वा (अश्नुताम्) (च) (देवाः) (मयि) (उत्तमाम्) (श्रियम्) (दधतु) स्थापयन्तु (तस्यै) (ते) तुभ्यंश्रियै (स्वाहा) सुकृतमस्तु १०

इतिश्रीभृगुवंशावतंसश्रीनाथूरामसूनुज्वालाप्रसादशर्म्मकृतेयजुर्वेदीयब्रह्मभाष्येसार्वभौधिकमंत्रोक्तिर्नामद्वात्रिंशोऽध्यायः॥३२॥

॥ य० ॥ माध्य० श्रा० ॥ वाज० सं० ॥

॥ अ० ३२ ॥ कं० १६ ॥ १२७६ ॥

१२७१ ॐ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् १ सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्सं ज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या महो अग्ने इत्यन्ताः सप्तदश ऋचोऽग्निदेवत्याः पुरोरुचो भवन्ति। पुरोरुक् शब्देन ग्रहग्रहण मंत्रा उच्यन्ते न यजूरूपाः ऋग्घि पुरोरुगिति श्रुतेः उक्थ्य महावैश्वदेवपात्नीवत हारियो जनेषु यजूरूपे ग्रहण मंत्रे सत्यपि तं वाऽअपुरोरुकं गृह्णातीति श्रुतेस्तत्र न दोषः अत एवाग्नेयीभिर्ऋग्भिरेव निवर्त्यन्ते नोपयामादीनि॥ आवायवीत्यस्याः (७,७) स्थाने-

ॐ अस्याजरास इत्यस्य वत्सप्रीऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता-१

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः। श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः १

मंत्रार्थः-(अस्य) महानारायणस्य (अग्नयः) ब्रह्म. विष्णु महेश देवादिस्वरूपाः (अजरासः) जरारहिताः (दमाम्) लोकानाम् (अरित्राः) अरिभ्योऽसुरैरक्षकाः तथा (अर्चद्धूमासः) (अर्चन्) अर्चनीयो देवयान मार्गः (धूमः) पितृयान मार्गस्ताव ऋद्धू मौतत्सम्बाधिनः (पावकाः) शोधकाः (श्वितीचयः) (श) सुखं (व) कल्याणं (इ) तुष्टिः (त) शक्तिः (ई) पुष्टिस्ताश्चिन्वन्ति भक्तस्य वर्धयन्तिते। चिनोतेः क्विप् अनित्य मागम शासनमिति तुगभावः (श्वात्रासः) (श) शिवः (व) विष्णुः (आ) विनायकः (त) शक्तिः (र) सूर्यः पञ्चदेवस्वरूपाः तथा (भुरण्यवः) (भ) महत् (उ) अहङ्कारः (र) अग्निः (ण) जलं (ण) आकाशः (य) वायुः (उ) भूमिस्तद्गुरण्युस्तत्सम्बन्धिनः (वनर्षदः) (व)

त्वक् (अ) चक्षुः (न) घ्राणं (अ) श्रोत्रं (र) वाक्तनासुसीदन्निते तथा (वायवः) प्राण रूपाः (नः) च (सोमाः) आत्म प्रति-
विंव रूपाः सोमोवैभ्राट् श० —— ॥ १ ॥ ॐ हरयइत्यस्य विश्वरूप ऋषिर्गायत्री छन्दोऽग्निर्देवता—इन्द्रवायूइत्यस्या (७,८)

**मंत्रार्थः**—(हरयः) (ह) चित्तम् (अ) अहङ्कारः (र) बुद्धिः (इ) मनस्तद्रूपाः तथा (वातजूताः) वातेन जूतं गमनं प्रसारो ये
षां ते (धूमकेतवः) धूम एव केतुरूपि कोयेषां ते (अग्नयः) यज्ञार्हाः (उप द्यवि) उपस्वर्गे प्राप्त स्वर्गे (पृथक्) नाना-
प्रकारेण (यतन्ते) यत्नं कुर्वन्ति ॥ २ ॥ ॐ यज्ञान इत्यस्य गोतम ऋषिर्गायत्री छन्दोऽग्निर्देवता—
मैत्रावरुणस्य पुरोरुक् अयंवामित्यस्याः (७,९) स्थाने **मंत्रार्थः**— यज्ञाग्निं स्तौति हे (अग्ने) (नः) अस्माकम्

**हरयो धूमकेतवो वातजूता उप द्यवि। यतन्ते वृथगग्नयः ॥ २ ॥ यज्ञा नो मित्रा वरुणा यज्ञा देवाँ२ ॥ ऋतम्बृहत्। अग्ने यक्षि स्वन्दमम् ॥ ३ ॥ युक्ष्वा हि देवहूतमाँ२ ॥ अश्वाँ ॥ अग्ने रथीरिव। नि होता पूर्व्यः सदः ४**

(मित्रा वरुणा) मित्रा वरुणौ देवौ (आयज) (देवान्) (यज) (बृहत्) महत् (ऋतम्) यज्ञस्वरूपम् (स्वम्) (दमम्) गृहम्
(यक्षि) यज ॥ ३ ॥ **अथाध्यात्मम्**— (अग्ने) हे आत्माग्ने (नः) अस्माकं (मित्रावरुणा) प्राणो दानौ। प्राणोदा
नौ मित्रावरुणौ ३।२।२।१३ (आयज) (देवान्) इन्द्रियाणि (यज) (बृहत्) महत् (ऋतम्) यज्ञस्वरूपम् (स्वम्)
(दमम्) गृहं भूतात्मानम् (यक्षि) यज ॥ ३ ॥ आश्विन गृहस्य पुरोरुक् यावां कशेत्यस्याः (७,११) स्थाने व्याख्या
ता (१३,३७) ॐ होरूप इत्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्दो मार्गो देवते ॥ भक्त पुरोरुक् तं प्रत्नथेत्यस्याः (७,१२)

१२७९ स्थाने मंत्रार्थः-(अन्या)[१] (अन्यो)[२] (विरूपे)[३] पृथग्रूपे (स्वर्थे)[४] (सु) अमृतं मोक्षः (व) दिव्यविषयोर्थौ ययोस्ते (द्वे)[५] रात्र्यहनी पितृयान देवयान मार्गरूपे (वत्सम्)[६] जीवात्मानं (उपधापयेते)[७] क्षीरं पाययतः (चरतः)[८] निरन्तरं प्रवर्त्तेते (अन्यस्याम्)[९] पितृयानरूपायां रात्रौ (हरिः)[१०] चन्द्रमा (स्वधावान्)[११] अन्नवान् (भवति)[१२] (अन्यास्याम्)[१३] देवयानरूपाहनि (शुक्रः)[१४] सूर्यः। एष वै शुक्रो य एष तपति श० ४।३।१।२६ (सुवर्चाः)[१५] मोक्ष एव तेजो यस्य सः (ददृशे)[१६] दृश्यते॥५॥

मन्थिग्रहपुरोरुक् अयं वेन इत्यस्याः (७,१६) स्थाने। व्याख्याना (३,१५) ॐ त्रीण्यन्यस्य विश्वामित्र ऋषिस्त्रिष्टुप्-

द्वेविरूपेचरतःस्वर्थेऽअन्यान्यावत्समुपधापयेते। हरिरन्यस्याम्भवति
स्वधावाञ्छुक्रोऽअन्यस्यान्ददृशेसुवर्चाः॥५॥ अयमिहप्रथमोधायिधा
तृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः। यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रं
छन्दोऽग्निर्देवता- विभ्वंविशेविशे॥६॥

आग्रयणग्रहस्य पुरोरुक् ये देवास इति (७,१९) स्थाने मंत्रार्थः-(त्री)[१] त्रीणि (सहस्राणि)[२] (त्रीणि)[३] (शता)[४] शतानि (त्रिंशत्)[५] (च)[६] (नव)[७] (देवाः)[८] (अग्निम्)[९] अग्निमात्मानमग्निम्वा (असपर्यन्)[१०] परिचरन्ति ते (घृतैः)[११] घृतैरिन्द्रियैर्वा। प्राणाः पयः शीर्षस्तत्प्राणं श० ६।५।४।१५ (औक्षन्)[१२] अग्निमसिञ्चयन्। उक्ष सेचने लुङ् (अस्मै)[१३] अग्नये (बर्हिः)[१४] बर्हिः प्राणम्वा (अस्तृणन्)[१५] आच्छादयन् (आदित्)[१६] अनन्तरमेव (होतारम्)[१७] होतारं वा चन्द्रमा (न्यसादयन्त)[१८] होत्रे कर्म्मणि नियुक्तवन्तः॥७॥ मन्थिवदेव ध्रुवग्रहपुरोरुक् (व्याख्याता ७, २४)-

ॐअग्निरित्यस्य भरद्वाजऋषिर्गायत्री छन्दोऽग्निर्देवता— ऐन्द्राग्नग्रहपुरोरुक् इन्द्राग्नी आगतमित्यस्याः (७,३१)
स्थाने **मंत्रार्थः** (समिद्धः) दीप्तः (शुक्रः) शुद्धः (आहुतः) निमंत्रितः (अग्निः) अग्निरात्माग्निर्वा (द्रविणस्युः)
हविर्लक्षणं धनमात्मप्रतिविंबं वा समिच्छन्। सुप् आत्मनः क्यच् क्याच्छन्दसीति क्यजन्ताद् उ प्रत्ययः (विपन्यया) विविधया पूजया। पनतिरर्चतिकर्मा (वृत्राणि) पापानि (जङ्घनत्) अत्यर्थं हन्ति। यङ्लुगन्तम् ॥ ९॥
ॐविश्वेभिरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता—

त्रीणि शता त्री सहस्राण्यग्निं त्रि॒ꣳशच्च देवा नव चासपर्यन्। औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥ ७ ॥ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ ८ ॥

वैश्वदेवग्रहपुरोरुक् ओमास श्चर्षणीत्यस्याः (७,३३) स्थाने—
**मंत्रार्थः**— हे (अग्ने) अग्ने आत्माग्ने वा त्वं (मित्रैः) महानारायणस्य (धामभिः) तेजोरूपैः (विश्वेभिः) सर्वैर्देवैः (इन्द्रेण) (वायुना) सह (सोम्यम्) सोममयम् मम प्रतिविंब सम्बन्धिनं वा (मधु) (आपिब) ॥ १० ॥
ॐआयादित्यस्य पराशरऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता— मरुत्वतीयग्रहपुरोरुक् इन्द्र मरुत्व इत्यस्याः (७,३५) स्थाने ॥ **मंत्रार्थः**— (यत्) यदा (इषे) वृष्ट्यै (निषक्तम्) देवतोद्देशेनाग्नौ सिक्तं हुतम् (शुचि) मंत्रसं-

